'अङ्गादङ्गात्सम्भवसि हृदयादधि जायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतमिति श्रुतेः श्रीविट्ठलनाथानां पुरुषोत्तमत्वात्पुरुषोत्तमस्वरूपं पुरुषोत्तमस्यैव गम्यम् । 'न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः। स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तमे'ति । तस्मात् प्रभुचरणैरुक्तम् 'क्वचित्पाण्डित्यं चेन्न निगममतिः सापि यदि न क्रिया सा सापि स्याद्यदि न हरिमार्गे परिचयः । यदि स्यात्सोपि श्रीव्रजपतिरतिर्नेति निखिलैर्गुणैरन्यः को वा विलसति विना वल्लभवरम्' । बुद्धावतारे पाण्डित्यमस्ति, परं वेदमार्गे गतिर्न, 'श्रुतिजातं निन्दसी' तिवाक्यात् । ऋषभावतारे तद्द्वयमस्ति, परं वैदिकी क्रिया न । मूत्रपुरीषादिकं भवेत्, तथापि प्रक्षालनं न करोति । कपिलावतारे तत्त्रितयमस्ति, परं हरिमार्गे परिचयो न, सांख्याचार्यत्वान्मातुर्देवहूतेः सांख्योपदेशः कृतः । न च तत्र भक्त्युपदेशोऽस्तीति वाच्यम् । तदङ्गत्वेन तस्या गौणत्वात् । व्यासावतारे तच्चतुष्टयमस्ति, परं श्रीकृष्णचन्द्रे स्नेहो न । ज्ञानावतारत्वात् । 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति वचनात् । श्रीमद्वल्लभाचार्यावतारे तत्पञ्चकमस्ति । अत एव मत्प्रभूणां नाम

---

रूपमेव कुर्वन्तीति । यद्वा । निरुक्तकारैः सूर्मिः कल्याणोर्मिः स्रोत इति व्याख्यातं, तत्रायमर्थः । ककुदोस्यास्तीति काकुदो वृषः तत्सदृशो जीवः काकुदशब्देनोच्यते । सादृश्यं च ज्ञानादिशून्यत्वाज्जाड्यादिधर्मेण तादृशं भगवद्भजनहीनं पशुतुल्यं जीवं अनुक्षरन्ति, भगवन्नाममन्त्रादिकमुपदिशन्ति । दृष्टान्तः । यथा सूर्म्यं कल्याणोर्मिः स्रोतः सुषिरां बहुच्छिद्रां यथा प्रविशतीति । अत्र बहुच्छिद्रधारिण्या उपमानता । तन्निरूपिता जीवस्योपमेयता । कल्याणोर्म्युपमानतानिरूपितोपमेयता नाममन्त्रादिषु चेति स्वस्वरूपेण स्ववंशेन च जगदुद्धारकर्तृत्वं, अतः सत्यदेवोसि वासुदेवोसीत्यर्थः । किञ्च अन्या अपि श्रुतयः श्रीविट्ठलप्रतिपादिकाः पूर्वमेवोदिताः । किञ्च सर्वो वेदः श्रीकृष्णप्रतिपादकोऽतः श्रीविट्ठलप्रतिपादक एवेति विस्तरो न निरूप्यत इति दिक् । 'श्रीविट्ठले कृष्णचन्द्रे विभिन्नमतयो हि ये । तेषां सङ्गो न मे भूयाद्द्विषतोऽपि सुदुःसहः । एतदेव हृदिकृत्य श्रुतिमाहुः अङ्गादङ्गादिति । गम्यमिति । 'वक्ता कश्चन मद्वते' इति ब्रह्माण्डवाक्यात् । तत्र गीतां प्रमाणयति नहि ते इत्यादि । एवञ्च श्रीमदाचार्याणामपि पूर्वोदाहृतश्रुतिस्मृतिपुराणवचनैः पुरुषोत्तमत्वेऽवधारिते श्रीविट्ठलेशस्यापि तत्त्वे श्रीमदाचार्यस्वरूपज्ञानं तेषामेवेत्यभिप्रेत्याहु तस्मादित्यादि । वैदिकी क्रिया नेति । 'आचारहीनं न पुनन्ति वेदा' इति स्मृतेः । अत्र हेतुमाहुः सांख्याचार्यत्वादिति । गौणत्वादिति । 'कृष्णसेवापरं वीक्ष्ये'त्यादि भगवत्प्राधान्येन भगवन्मार्गवर्तित्वमपेक्षितमिति भावः । व्यासावतारेति । 'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवे' दितिवाक्याद्भगवदवतारत्वम् । पञ्चकमस्तीति । 'अखण्डखरपण्डितप्रसृतचण्डपाखण्डवाग्विखण्डनसुचण्डिमा धरणिमण्डलाखण्डल' इति वाक्यं पाण्डित्यप्रतिपादकं, वेदपारग इति निगमगतिनिरूपकं, कर्ममार्गप्रवर्तक इति वैदिकक्रियावैशिष्ट्यबोधकं,

'व्रजप्रियः प्रियव्रजस्थिति'रिति । अतोऽवतारान्तराश्रयं त्यक्त्वा निजाचार्याश्रय एव कर्तव्य इति तात्पर्यार्थः सिद्धः ।

यद्यप्ययोग्य एवाहं तत्स्वरूपनिरूपणे ।
तदीयत्वेन कृपया सर्वं सम्पादितं मयि ॥ १ ॥
यथामति विलासेन प्रेमोल्लासेन वर्णितम् ।
श्रीमदाचार्यचरणाः प्रसीदन्तु स्वतः सदा ॥ २ ॥
इति श्रीवल्लभाचार्यचरणाब्जप्रसादतः ।
निगमोदिततद्रूपं वर्णितं हि यथामति ॥ ३ ॥
यद्यप्यज्ञानदोषेण ह्यन्यथा वर्णितं भवेत् ।
क्षमन्तां श्रीमदाचार्याः स्वीयेषु करुणाकराः ॥ ४ ॥

**इति श्रीमत्प्रभुचरणात्मजमहाराजश्रीयदुनाथकुलोद्भव-
गोस्वामिश्रीगोपालसुतश्रीगिरिधरविरचितं
श्रुतिरहस्यं समाप्तम् ॥**

---

भक्तिमार्गाब्जमार्तण्ड इति यागादौ भक्तिमार्गैकसाधनत्वापदेशक इति च हरिमार्गज्ञातृत्वज्ञापकं, 'स्फुरत्कृष्णप्रेमामृतरसभरेणातिभरिता विहारान् कुर्वाणा व्रजपतिविहाराब्धिषु सदे'ति वाक्यं स्नेहबोधकमिति भावः । निजाचार्याश्रय एवेति । पूर्वोदाहृतश्रुतिकदम्बैः श्रीमदाचार्याश्रयितुरेव भगवतः श्रीमल्लीलापुरुषोत्तमानुभवः । अन्याश्रयेण न तथेत्येवकारार्थः । तथा च भारद्वाजसंहितायां 'जानतस्त्वनुपेतस्य ब्रह्मचर्यमभीक्षतः । वृथैवात्मसमुत्क्षेपो जायते कृष्णवर्त्मनी'ति । एतदर्थस्तु निरूपित एव । तात्पर्यार्थ इति । सम्पूर्णग्रन्थस्य पूर्वोदितश्रुतिस्मृतिवाक्यानामिति शेषः ।

एवं निरूप्य 'भक्तानां दैन्यमेवैकं हरितोषणसाधन'मिति वाक्येन दैन्यस्यावश्यकत्वेन स्वस्मिन् तद्द्योतयितुं ग्रन्थान्ते च मङ्गलमाचरणीयमिति शिष्टसम्प्रदायाच्छ्रीमदाचार्यान्प्रार्थयन्ते यद्यपीत्यादि । ईश्वरस्याखिलस्वामिनो निरूपणमल्पप्रज्ञेन कर्तव्यमित्ययोग्यमिति भावः । तर्हि कथं निरूपितमित्याहुः तदीयत्वेनेति । श्रीमदाचार्यैः स्वीयत्वेन स्वस्वरूपं कृपया बोधितं ध्रुवन्यायेन । अतो मया तथैव निरूपितमित्याहुः यथामतीति । श्रीमदाचार्या अस्माकं हृदि प्रविष्टास्तदा यथामतिविलासेन परमानन्दस्य निरूपणे परमानन्द एव भवतीति प्रेमोल्लासेन वर्णितं मया । 'केवलेन हि भावेने' त्यादिवाक्यैः प्रेम्णैव प्रसीदन्ति श्रीमदाचार्यचरणा इति भावः । प्रसीदन्त्विति । श्रीमदाचार्यचरणप्रसादेनैवास्माकं निखिलप्रत्यूहव्यूहनिरसनपूर्वकं सर्वेष्टसिद्धिरिति भावः । स्वत इत्यनेनास्मासु साधनरहितेषु कृपया प्रसीदन्त्विति भावः । पुनः श्रीमदाचार्यचरणप्रसादं प्रार्थयन्तः समाप्तिं प्रतिजानते इतीत्यादि । चरणाब्जप्रसादेनैव वेदोदितरूपज्ञानमिति भावः । यद्यपीत्यादि । स्वस्मिन्नज्ञानादिनिरूपणेनातिदैन्यद्योतनेन प्रभोरतिकरु-

णोत्पत्तिर्भवतीति भावः। यद्यपि श्रीमदाचार्यकुलोद्भवानां पूर्णपुरुषोत्तमत्वेन श्रीमदाराध्यचरणानामपि साक्षात्पुष्टिपुरुषोत्तमरूपत्वादज्ञानादि न सम्भवति, तथापि शिष्यपरम्परायै निरूपितमिति भावः ॥ ४ ॥

श्रीमदाचार्यपादाब्जकृपया यन्निरूपितम् ।
साधवः कृपया पूर्णाः सम्यक्पश्यन्तु-मत्कृतिम् ॥ १ ॥
श्रीमदाचार्यरूपार्थबोधिकाः श्रुतयोपि याः ।
निरूपितास्तथा स्थालीसिक्थन्यायोऽवधार्यताम् ॥ २ ॥
मम तु प्रतीभात्येवं सर्वे वेदा महाप्रभोः ।
श्रीवल्लभार्यरूपं हि बोधयन्त्येव निश्चितम् ॥ ३ ॥
श्रीमदाचार्यवर्याणां स्वरूपं श्रुतिदुर्गमम् ।
क्काल्पीयसी तत्र बुद्धिर्मम रूपनिरूपणे ॥ ४ ॥
तथापि श्रीमदाराध्यचरणैर्यन्निरूपितम् ।
तद्बलं सम्यगाश्रित्य यथामति निरूपितम् ॥ ५ ॥
श्रीमदाराध्यपादानां ग्रन्थाशयनिरूपणे ।
त एव शरणं सन्ति नान्यथा मतिरीदृशी ॥ ६ ॥
वन्देऽहं श्रीमदाराध्यचरणेन्दुनखप्रभाः ।
याभिर्लोकत्रये पूर्ण तिमिरं मम नाशितम् ॥ ७ ॥
यथा श्रीश्रीमदाचार्यचरणैः प्रेरितोस्म्यहम् ।
तथैव लिखितं सर्वं स्वबुद्ध्या नैव किञ्चन ॥ ८ ॥
गृह्यतां श्रीमदाचार्यभृत्योक्तत्वादहो बुधाः ।
श्रीमदाराध्यचरणे वाक्यपुष्पं समर्पितम् ॥ ९ ॥
यदत्र सदसद्वापि व्याख्यातं स्वल्पबुद्धिना ।
क्षमन्तां श्रीमदाचार्यचरणाः सर्वदा मयि ॥ १० ॥

इति श्रीमन्निजचरणनखचन्द्रप्रभाच्छटानिरस्तसमस्तजीवान्धकार-
श्रीवल्लभाचार्यावतारकुलकमलविकासकनिजशरणसन्तापह-
रणश्रीमद्गोस्वामिश्रीमद्गिरिधरचरणकोकनदमधुपाय-
मानमानसतैलङ्गजातीयगोकुलग्रामस्थनेतोपना-
मकरामकृष्णभट्टप्रकाशितश्रुतिरहस्यप्रकाशः
सम्पूर्णतामव्राजीत् ॥